* श्रीः *




# संस्कृत-रत्नाकरः

चित्रं द्विजपतिमण्डलकलासमृद्ध्यायमेधमानोऽपि ।
वेलामनतिक्रामन् संस्कृतरत्नाकरो जयति ॥ १ ॥

वर्षम् ६ | जयपुरम्, श्रावणः १९९६ | संख्या ८

## वैदिकी प्रार्थना ।

आकर्णयेम सततं शुभमेव वाक्यं
पश्येम नेत्रयुगलेन सुरम्यदृश्यम् ।
कुर्याम देवहितमेव सदा सुकार्यं
दीर्घं लभेमहि तथायुरपारवीर्यम् ॥ १ ॥

आयान्तु दैवतगणा गृहमस्मदीयं
तिष्ठन्तु दर्भरचितेषु शुभासनेषु ।
गृह्णन्तुन्त्वथो शुचि हविः सुतपौत्रबन्धून्
रक्षन्तु पावनधिया च विलोकयन्तु ॥ २ ॥

—संपादकः

---

# कविताकुसुमावलिः

( रचयिता—देवर्षिरमानाथशास्त्री )

## अर्थप्रशंसा

अर्थेन + धर्मकरणं, न विनाऽमुनाऽसा-
वर्थः, पुनः स इह धर्मभरेण लभ्यः ।
तद्व्याकृतिप्रवणबुद्धिमतां मतेन
स्वान्योन्यमाश्रयवतोरुभयोर्न सिद्धिः ॥६६॥

शब्दोऽर्थहीन इति यं सुधियस्त्यजन्ति
पूर्णार्थमेव यमवाप्य भवन्ति तुष्टाः ।
यद्यागमेष्वपि महत्त्वमदोऽर्थतत्त्वे
दोषस्तदेह क इवाऽर्थपरिग्रहे नः ॥६७॥

अर्थोऽर्थहेतुरिह × कामगमोऽर्थमूलो
धर्मार्जनं च यदिहार्थवता सुशक्यम् ।
मोक्षं निर ❀ र्थमपि चाद्रियते न कोपि
मन्येऽर्थकारणकमेव विभाति विश्वम् ॥६८॥

अर्थं श्रुतिः परिनिषेधति च स्मृतिश्चे-
त्येवं विदामपि वचः परिहासमात्रम् ।
यासां यदात्पदमपि क्रमते विनाऽर्थं
नैवेह, ताः कथमिमं प्रतिषेधयन्तु ॥ ६९ ॥

---

+ अर्थेन धर्मः धर्मेण चार्थ इत्युभयोः परस्परमन्योन्याश्रयदोषदुष्टत्व त्
उभयोः कदापि न सिद्धिरिति केवलं वैयाकरणानां विप्रतिपत्तिः ।

× कामगतिः कामपुरुषार्थ इत्यर्थः । ❀ सर्वेपि पुरुषार्था अर्थमूला इत्यर्थः ।

लक्ष्मीश इत्यसुरहन्तरि तन्महत्त्वं
श्रीकण्ठ इत्थमिह शम्भुमपि स्तुवन्ति ।
सम्मानमर्हति विधिः कमलासनत्वा
दग्निर्धनंजय इतीव पुनाति लोकम् ॥ ७० ॥

## अतिनिन्दा

संगृह्य यं पतति सन्मनुजोपि नीचै-
र्यं वा विसृज्य सहसोर्ध्वमुपेति मर्त्यः ।
एतावतैव ननु किं न विनिश्चिनुध्व-
मर्थस्य गौरवमिहास्ति कियन्नवेति ॥ ७१ ॥

## गार्हस्थ्यसमालोचना

आज्ञाकरी तदनु नेत्रमनोभिरामा
लभ्येत साधुगृहिणी गृहिणा यदीह ।
संसारसारमभिमर्शयतो जनस्य
गार्हस्थ्यभार इति यत्कियती नु मात्रा ॥ ७२ ॥

स्वर्गापवर्गनरकांश्चिनुमस्तदत्र
हेतुर्गृहाश्रमकृतिर्गृहिणीति चोभे ।
तत्रापि सैव गृहिणी लभते + विशेषं
यत्किंचिदेव यदुपाश्रयतो विदध्मः ॥ ७३ ॥

यत्तत्त्वमस्ति परमं पुरुषोत्तमाख्य-
मानन्दमात्रमिति वेदविदां प्रसिद्धम् ।
मन्ये जगज्जननकारणमेतदात्मा-
ऽऽ*नन्दोपि लोकजननीं न रमां विना स्यात् ॥७४॥

+ विशेषहेतुत्वम् । * पुरुषोत्तमस्यापि साधुगृहिणीं विनाऽऽनन्दजनकं गार्हस्थ्यं न चलतीत्यर्थः ।

गायन्ति यत्र मुनयोऽप्यवदन्ति यच्च
शास्त्रे गृहाश्रममिहापि विनिर्णयोऽस्ति ।
स्तुत्यं निदानमुचिता गृहिणीगुणाःस्यु-
र्गार्हस्थ्यपि प्रकृतयः सहधर्मिणीनाम् ॥ ७५ ॥

## राज्यसमालोचना

उन्मार्गगामिनि नृपे स्वपथं विमुच्य
मार्गात्स्वयं जनगृहस्थितयश्चलन्ति ।
के नाम पादपगणाः, पृथवो नितान्तं
कम्पन्त एव गिरयश्चलने भुवोऽस्याः ॥ ७६ ॥
सत्स्वेव मंत्रिषु दृढं बलवत्सु, राज्यं
प्राज्यां स्थितिं तु लभते न बिना नृपेण ।
प्राणेष्वसत्सु वद साहजिकेषु, बह्वै-
र्वातैः कृतैरपि कियद्ध्रियतां शरीरम् ॥ ७७ ॥

## सुधीसमालोचना ।

अस्त्येव राज्यमपि पूर्णसमृद्धकोशं
स्मोवा वयं तदधिपास्तदिदं न किंचित् ।
तत्पालनाहितधियः सुधियो न चेत्स्युः
सेतुः कियत् स्थिरतरःसिकतावितानः ॥ ७८ ॥
विद्वद्भिरेव किमुवा पृथुशास्त्रकन्था-
व्यर्थातिभारभरितैरिह सत्फलं नः ।
नो चेदमीषु परलोकपरा कृतिः स्यात्
नो चेत्परस्वहितकर्मपरा धियः स्युः ॥ ७९ ॥

## परलोकसमालोचना

लोकैः परैः किमु न चेत्परदर्शी तेज-

स्तेनापि किं यदि भवेन्न इहात्मबोधः ।
ताभ्यामलं यदि भवेन्न परात्मकाम-
स्तेनापि किं यदि न नः फलतीह कृष्णः ॥ ८० ॥
तल्लीलयैव विहितं भवतीह यद्यत्
तेनैव तुष्टहृदयाः स्वकृतं स्मरन्तः ।
वर्तामहे यदि कथाभिरमुष्य, सोऽयं
कृष्णाश्रयो यदि भवेत्परमं फलं नः ॥ ८१ ॥
श्रीद्वारकानाथविदो देवर्षेर्लब्धजन्मना ।
रमानाथेन रचिता स्रगियं हरयेऽर्पिता ॥ ८२ ॥
हरिः ओं३म् ।

---

# धर्ममण्डनः

## सदाचारमण्डनम्

स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु ॥
अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ॥
मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः ।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥
मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥
वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥

वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥

पौर्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः ।
ब्रह्माभ्यासेन चाजस्रमनन्तं सुखमश्नुते ॥

सावित्रान् शान्तिहोमांश्च कुर्यात् पर्वसु नित्यशः ।
पितृश्चैवष्टकास्वर्चेन्नित्यमन्वष्टकासु च ॥

दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
उच्छिष्टान्नं निषेकं च दूरादेव समाचरेत् ॥

मन्त्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥

दैवतान्यभिगच्छेतु धार्मिकांश्च द्विजोत्तमान् ।
ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ॥

अभिवादयेद् वृद्धांश्चैव दद्याच्चैवासनं स्वकम् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥

श्रुतिस्मृत्युदितं सम्यङ् निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद् धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥

इत्यादि—

एवं च सर्वदा सदाचारशीलः स्यात् ।

तथा च संग्रहश्लोकः

आचारः सर्वधर्माणां, सुखानां यशसः, श्रियः ।
मूलमस्ति ततो नित्यं भवेदाचारवान्नरः ॥ २ ॥

—:०:—

एवं युक्तिभिरप्यथो दृढतरैः शब्दप्रमाणैरपि
धर्मांस्तांस्तु सनातनान् बहुतरान् संस्थाप्य तोषं गतः ।
श्रीसूर्यः सकलान् हि मानवगणानत्याहतो याचते
सेवध्वं निजधर्ममेव सुजनाः स्याद् येन भाग्योदयः ॥१॥

महेन्द्रगढवास्तव्या यस्य पूर्वे पितामहाः ।
पुरं जयपुरं प्राप्तो वृत्त्यर्थं यत्पितामहः ॥

पुत्रः प्रभुदयालोर्यो गोपालस्य च दत्तकः ।
सूर्यनारायणः सोऽयं धर्ममण्डनमातनोत् ॥

संमण्डितं भवति यद्हृदयं त्वनेन
संमण्डयेत स सुमतिः सुधियां समाजम् ।
किं चास्य धर्मविजयः सकलेऽपि देशे
दुर्वादिनां भवति बुद्धिविमर्दनं च ॥

विद्वेषो नास्ति बुद्धौ मे धर्मभावस्तु केवलम् ।
विस्तरं यात्विति मया रचितो धर्ममण्डनः ॥

शुभं भूयात्

— संपादकः ।

# श्रीगणपतिपूजनम्

निबद्धा—श्रीदीनानाथशर्मा शास्त्री सारस्वतः ।
( स० ध० कालेजोपाध्यक्षः, मुलतान सिटी )

एतेन गणेशपूजनं गृह्यसूत्रोक्तमपि सिद्धम् । न च बोधायनगृह्यशेषसूत्रे बहुत्र 'इत्याह भगवान् बोधयनः' इति दर्शनात् तत् तत्कर्त्तृकं न वर्त्तते—इति वाच्यम् । अन्यथा सुश्रुतसंहितायां सर्व्वत्र 'इत्याह भगवान् धन्वन्तरिः' चरकसंहितायांञ्च 'इत्याह भगवान् पुनर्वसुरात्रेयः' एतदाद्युल्लेखदर्शनात् ते ते ग्रन्थास्तत्तत्कर्त्तृका नाख्यायेरन् । परं नैवमेतत् । इयं हि प्राचां शैली यत्—स्वस्वपुस्तकं ते ते ऋषिमुनयः स्वस्वशिष्यमुखेन प्रकटीचक्रुः । यथा—मनुस्मृतिरपि भृगुणा प्रोक्ता । बृहत्पराशरस्मृतिरपि सुव्रतेन प्रोक्ता । एवं स्मृत्यन्तराण्यपि । अन्यथा शिष्यद्वारा कथनात् सर्व्वेषामेव प्राचीनग्रन्थानामप्रामाण्यं प्रसज्येत । परमनिष्टमेतत् । वेदाः परमात्म—प्रणीता मन्यन्ते वादिभिरपि, तात्रऽपि परमात्मनो महान् महिमा प्रदर्शितः । यद्येतेन तस्य दोषः, यथा 'भगवान् बोधायनः' इत्यादिशब्दोल्लेखेनापि न दोषः ।

कृष्णयजुर्वेदीयशाखायां मैत्रायणीसंहितायाम—'तत्कराटाय विद्महे, हस्तिमुखाय धीमहि, तन्नो दन्तीप्रचोदयात' इति गणेशगायत्र्यप्युपलब्धा । तेनाऽपि गणेशपूजा वैदिकी सिद्धा ।

महाभाष्यस्य पस्पशाह्निके अध्वर्युवेदस्य (यजुर्वेदस्य) १०१ शाखा गणिताः । तत्र १५ शाखाः शुक्लयजुर्वेदस्य, ८६ शाखाश्च कृष्णयजुर्वेदस्य सङ्कलिताः । तेन कृष्णयजुर्वेदोऽपि यजुर्वेद एव ।

तेनेयं गणेशपूजापि वैदिकी सिद्धा । बौधायनादिशाखा अपि कृष्ण-यजुर्वेदस्य । तदीय गृह्यसूत्रेणप्राग् गणेशपूजनं निर्दिष्टमेव । शाखा अपि वेदा भवन्ति । अत एव महाभाष्ये पस्पशाह्निके 'अस्त्यप्रयुक्त' इत्याक्षेपवार्त्तिकस्य 'सर्वेदेशान्तरे, इत्युत्तरपक्षवार्त्तिकभाष्ये वेदे इत्युत्वा 'यन्मे नरः श्रुत्यं ब्रह्म चक्र' इति काठकसंहितायाः ९।१८ प्रमाणंदत्तम् । एवं 'यद्वो रेवती रेवत्यां तमूष' इति लुप्तशाखीयो मन्त्र उपन्यस्तः । इतरमन्त्रौ वर्त्तमानशाकलादिशाखयोः । तेन भिन्न-शाखानामपि वेदता सिद्धा ।

एवं महाभाष्यस्य प्रत्याहाराह्निके–'ननुच भोश्छन्दोगानां सात्यमुग्रिराणायनीयाः अर्द्धमेकारमर्धमोकारञ्चाऽधीयते– 'सुजाते एश्वसूनृते' इत्यादिना वेदस्य शाखाविशेषे वादिनाऽर्धएकारः साधितः । तदुत्तरे भाष्यकृद् वक्ति– 'पारिषदकृतिरेषा तत्र भवताम् नैव लोके नाऽन्यस्मिन् वेदे अर्ध एकारोऽर्ध ओकारोवाऽस्ति' एओङ्सूत्रे । अत्र 'नैव लोके नाऽपि चवेदे' इति वक्तव्ये नाऽन्यस्मिन् वेदे' इति भाष्योक्त्या छन्दोगसात्यमुग्रिराणायनीयशाखानामपि वेदता सिद्धा । अन्यथा 'अन्यस्मिन् वेदे' अत्र 'अन्य' शब्दप्रयोगो व्यर्थ आसीत् । तेन शाखान्तरेषु प्रोक्ता वार्ता अपि वैदिक्य एव सिद्धाः ॥ एवं मीमांसादर्शने वेदस्याऽपौरुषेयताधिकरणे 'वेदाँश्चैके सन्निकर्षं पुरुषाख्या' १।१।२७ इतिपूर्वपक्षसूत्रस्य शाबरभाष्ये 'पुरुषेणहि समाख्यायन्ते वेदाः– 'काठकं कालापकं पैप्पलादकम्' इत्येतद्वचनात् तदुत्तरे 'आख्याप्रवचनात्' १।१।३० इति सूत्र-भाष्ये 'स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी, कठः पुनरिमां केवलां शाखामध्यापयाम्बभूव' एतदादिकवचनस्य वेदस्याऽपौरुषे-यताऽधिकरणे दर्शनात् काठकादिसर्वशाखानामपि वेदत्वं सिद्धम् ।

एतेन शाखा वेदभिन्ना आचक्षाणाः स्वा० दयानन्दस्तदनुयायिनोऽपि-चप्रत्याख्याताः । तदभिमता वेदा अपि क्रमशः शाकलवाजसनेय-कौथुमशौनकशाखा एव । अस्तु—पुनःप्रकृतमनुसरामः –

एवं तैत्तिरीयारण्यकेऽपि– 'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दंती प्रचोदयात्' १०।१ एवं नारायणोपनिषद्यपि १।१५ गाणेशगायत्री उपलब्धा । महाभाष्ये-'ऋषिः पठति–शृणोत ग्रावाणः' ३।१।७ अयं मंत्रस्तैत्तिरीयसंहितायाः (कृष्णयजुर्वेदस्य) १।३।१३।१ उद्धृतः । स च ऋषि (वेद) शब्देन प्रोक्तः 'ऋषिर्वेदे वशिष्ठादौ' इति मेदिनीकोषः । तेन यजुर्वेदोऽपि वेदः सिद्धः । एतेन कृष्णयजुर्वेदे क्वचित् स्वपक्षविघातं दृष्ट्वा तत्र अनार्य्य-मिश्रणमाचक्षाणाः केचित् परास्ता वेदितव्याः । एवं गणेशपूजा वैदिक्यपि सिद्धा कृष्णयजुर्वेदे प्राप्ता । ×

अथ चोपनिषदारण्यकादिभागः प्रायो ब्राह्मणभागान्तर्गतः । ब्राह्मण-भागश्च वेदः । अत्र प्रमाणं– 'मन्त्रब्राह्मणं वेद इत्याचक्षते' मंत्र ब्राह्मणयोर्वेदनामधेयम्' इति बोधायनगृह्यसूत्रे २।६।२-३, ३।२।६३॥ 'स्यादाम्नायधर्म्मित्वाच्छन्दसि नियमः' १।४ इति वाजसनेयिप्राति-शाख्यसूत्रं व्याचक्षाणेन श्रीमता उव्वटेन 'आम्नायो वेदः, इत्युक्त्वा 'तत्र ब्राह्मणं विध्यर्थवादरूपम्, मन्त्रस्तुकर्म्माङ्गभूतद्रव्यदेवता-स्मारकः' इत्युभयस्यैव आम्नायत्वं मतम् ॥ 'जायमानो ह्वै ब्राह्मण-स्त्रिभिर्ऋणैर्ऋणवान् जायते' इति न्यायदर्शने ४।१।५९ सूत्रभाष्य-श्रुतिरुदाहृता । एषा ब्राह्मणभागस्य । न्यायभाष्यकृता ४।१।६०

× मम स्त्र्युपनयसम्बन्धिलेखे ४।१० अंके २८१ पृष्ठे 'परिवर्तनवादिषु श्रीयुतब्रह्मदत्तश्रीजयदेवादयः आर्यसमाजिकाः, अपरिवर्तनवादिषुतु सातव-लेकारदयः प्रमुखाः' इति पङ्क्तिस्त्रुटिता मुद्रणे ।

सूत्रं व्याचक्षाणेन स ब्राह्मणभाग ऋषिः (वेदः अतः)। 'आर्षं धर्मोपदेशं च' मनु० १२।१०६ 'ऋषिर्वेदे वसिष्ठादौ' इति मेदिनी कोषे, 'सम्बुद्धौ शाकल्यस्येतावनार्षे' १।१।१८ इति पाणिनिसूत्रे च ऋषिशब्देन वेदोमतः। ऋषेरिदमित्यार्षम्। एवं ब्राह्मणभागे बहुत्र मन्त्रभागोऽपि 'ऋषि' शब्देन प्रोक्त इत्यपि न विस्मर्तव्यम्।

एवं स्वा० दयानन्दाधीनस्य ईश्वरस्याऽपि मते ब्राह्मणभगो वेदः। तथा च स्वामी सत्यार्थप्रकाशे २५ पृष्ठे वक्ति—'कुलीन शूद्र हो तो उसको मन्त्रसंहिता छोडके सब शास्त्र पढावे,। पुनरसौ ४४ पृष्ठे ईश्वरप्रमाणेन शूद्राणामपि वेदाधिकारमाचष्टे। पूर्वत्र शूद्राणां मन्त्रभागे निषेधसूचनाद्, उत्तरत्र तेषां वेदेऽधिकार-निरूपणात् स्वामिपारतन्त्र्येण तथाऽर्थनिर्देष्टुरीश्वरस्याऽपि मते वेदो मन्त्रभागादवशिष्टो ब्राह्मणभाग एवेष्टः। अन्यथा मन्त्रभागा-दवशिष्टः कोऽसौ भागो यो वेदो भवेत्। मन्त्रभागे च प्राक् स्वामिना शूद्राधिकारनिषेधः कृतः। ईश्वरस्य का शक्तिर्यद्-दण्डिनः (स्वामिनः) ४४ पृष्ठकथनानुसारं मन्त्रभागाऽनधिकृते शूद्रे पुन—र्मन्त्राभागाधिकारं दद्यात्। अन्यथा साकारत्वादिव निराकारत्वा—दपि रहितं तं कृत्वा दण्डितं कुर्य्याद् दण्डी। तेन ब्राह्मणभाग ईश्वरमतेऽपि वेदः सिद्धः। एवं ब्राह्मणभागस्य वेदत्वे मम निबन्धो 'रत्नाकरस्य' वेदाङ्के, 'मधुरवाण्याः' ३।५—६—७—७ अङ्केषु सुप्र-भातस्य' १२। १ अङ्के च भिन्नभिन्नप्रमाणसंवँलितो द्रष्टव्यः। यद्येवं तर्हि ब्राह्मणभागान्तर्गतोपनिषदारण्यकादौ गणेशपूजनदर्श--नात् तत्पूजनं वैदिकतामस्पार्क्षीत्। ×                    ( शेषं पुनः )

× 'रत्नाकरे' २६४ पृष्ठे 'शूद्र पढावे' इत्यधिकं मुद्रितं स्वा० द० उद्धरणे, अस्माभिर्न लिखितम्, न तदुद्धरणे एव मासीत्। एवं २६५ पृष्ठे 'बालि-कोपनयनं' एतदग्ने 'निषिद्धम्' इति न मुद्रितम्।

# ❁ व्यञ्जनास्थापना ❁

( ले० साहित्यभूषण पं० नन्दलाल खेडवाल शास्त्री फतेहपुरस्थः )

व्यञ्जनावृत्तिखण्डनप्रकारे तदस्वीकर्तॄणां नैयायिकानां प्रतिवादिनां तस्याः शशविषाणायमानत्वात्पक्षद्वयमस्ति । ये त्वभिधयैव व्यञ्जनां गतार्थयन्ति तेत्वित्थमभिदधति । सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाया व्यापारः । इदमत्राकूतम् । यथा बलवता केनचित्पुंसा प्रेरित एकएवशरः एकेनैव वेगाख्येन व्यापारेण द्विषः प्राणहरणमुरोभेदंवर्मच्छेदञ्च कुरुते । यद्वा लक्ष्यमेकं भित्त्वा लक्ष्यान्तरमपि भिनत्ति । तथैवेकः शब्द एकेनैवभिधाख्यव्यापारेण पदार्थ स्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिञ्च विधत्ते । यथा गङ्गायां घोष इत्यत्र एकाकिन्यभिधैव गङ्गायाः प्रवाहरूपमर्थं तीररूपमर्थं शैत्यपावनत्वादिरूपमर्थञ्च बोधयति । अतो नास्ति व्यञ्जनायाआवश्यकीयत्वम् । व्यङ्ग्यत्वाभिमतस्यार्थस्याभिधयैवगतार्थत्वात् । अभिधाया दीर्घदीर्घतरव्यङ्ग्यबोधनरूपव्यापारेणैव व्यञ्जनावृत्तेः वैयर्थ्यं सिध्यति ।

व्यञ्जनाया निर्विषयत्वकरणे हेत्वन्तरमपिदर्शयतियथा यत्परः शब्दः स शब्दार्थः यदुच्चारणानन्तरं योऽर्थः प्रतीयते स तच्छब्दार्थः । यत्र शब्दस्य तात्पर्यं स शब्दार्थः । अतो भवन्तो यदुदाहरन्ति निःशेषच्युतचन्दनं स्तनतटमित्यादौ नायकान्तिकगमनरूपो विधिर्व्यञ्जनाव्यापारबोध्यः अतो व्यङ्ग्यः । अस्मन्मते नास्ति स व्यङ्ग्यार्थः । यतो विधौ तात्पर्यविषयतया विधिरत्र वाच्याएवास्ति ।

यतो निषेधोच्चारणानन्तरं विधिः प्रतीयते । तत्र तात्पर्यत्वात् ।

निषेधस्य विधिपरकतया विधिरभिधाया व्यापारः। यत्परः शब्दः स शब्दार्थः इत्यभिधावादिनां सिद्धान्तत्वात्, नास्त्यत्रावश्यकता व्यञ्जनायाः।

व्यञ्जनामनभिमन्यमाना ये त्वेवं प्रतिपादयन्ति। ते तात्पर्य-मजानन्तः सन्तः पुच्छविषाणहीना दीनाः पशवः एव सन्ति। तात्पर्ययुक्तवाग्विषये ते मूर्खरूपेणैवाखिलदयीभवन्ति। अतस्ते व्यञ्जनावृत्तिमानिनः साहित्यिकास्तेषां तात्पर्यानभिज्ञतां दर्शयन्ति। तथाहि। 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते'। इति

व्यञ्जनावादिनां सिद्धान्तः। अस्यायमर्थः। भूतं सिद्धं भव्यं साध्यं तयोः समभिव्याहारे पूर्वसिद्धं वस्तु भव्याय विधेयाय' प्रयु-ज्यते। यथा देवदत्तोग्रामं गच्छतीत्यादौ देवदत्तग्रामशब्दस्य पूर्व-सिद्धत्वात् भूतत्वं गमनस्य साध्यतया तस्य भव्यत्वम्। गमनरूप-भव्यायैव देवदत्तग्रामभूतस्योच्चारणं क्रियते, अतोऽत्र गमनमेव विधेयम्। नास्ति देवदत्तग्रामशब्दाय विधेयता। विधेयं शब्दोपा-त्तमेव भवति। शब्दोपात्त एव तात्पर्यं भवति। अभिधावादिनां मते यदुच्चारणानन्तरं योऽर्थः प्रतीयते सतदर्थ इति सिद्धान्तत्वात् 'देवदत्तोग्रामं गच्छतीति वाक्ये सर्ववाक्यस्यैव विधेयता सिध्यति सर्वस्योच्चार्यमाणत्वादिति।

अतः सर्ववाक्ये तात्पर्याभावात् सर्वत्र तात्पर्यमानिनस्ते पण्डि-तमानिनः अवश्यं तात्पर्यज्ञाने गताक्षराः सन्ति तद्वाक्यवर्तिपदोप-स्थापिते पदे एव तात्पर्यंभवति न तु प्रतीतमात्रे। कारकपदार्थाः कर्तृत्वादयः क्रियापदार्थेन गच्छतीत्यादिना अन्वयमलभमानाः सिद्धा अपिप्रधानक्रियानुकूलया साध्यीभूतया स्वक्रियया योगा-

द्विधेयतामिवदर्शयन्ति । स्वरूपेण सिद्धा अपि साध्यभूतक्रिया-विशिष्टतया साध्या इव भवन्ति । ततश्च दहनेनादग्धमात्रमेव दह्यते न तु दग्धमपि, इत्यदग्धदहनन्यायेन यावदप्राप्तं नव्यं भवति तावदेव शब्देन विधीयते न तु प्राप्तमपि । यथा पूर्वकालतःसमारब्धे यज्ञकर्मणि ऋत्विजां प्रचरणं भूतं पूर्वसिद्धमेवास्ति, एवं ऋत्विक्प्र-चरणस्यान्यतः सिद्धे, समाप्तिकालिकावभृथान्ते कस्यचिदुक्तिरियम् । अथ लोहितोष्णीषा ऋत्विजः प्रचरन्ति इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं न तु ऋत्विक्प्रचरणम् तस्य पूर्वसिद्धत्वात् । अतः लोहितो-ष्णीषत्वरूपभव्यायैव भूतस्य पूर्वसिद्धस्य ऋत्विक्प्रचरणास्यो-च्चारणं विधीयते । भूतं भव्यायोपदिश्यते, इत्यस्मदीयसिद्धान्तत्वात् भव्ये एव तात्पर्यमस्ति । युष्मदीयसिद्धान्तानुसारेणतु यदुच्चारणा-नन्तरं योऽर्थःप्रतीयते स तदर्थ इत्यादिना समस्तवाचि तात्पर्येण भाव्यम् । उच्चारणान्ते सर्वस्यैव प्रतीयमानत्वात्, न च तथा अतो भवन्तस्तात्पर्यानभिज्ञाः सन्ति ।

उदाहरणान्तरमपि यथा सायंप्रातर्जुहुयात् ' इत्यादिवचसा हवनस्य प्रमाणान्तरात् सिद्धौ दध्ना जुहोति इत्यत्र दध्यादेः करण–त्वमात्रं विधेयं तत्रैव तात्पर्यसद्भावात् न तु हवनमपि विधेयं भवितुमर्हति । एवं क्वचिदेकस्य विधेयता भवति कुत्रचिद्द्वयोः कुत्रचित् त्रयाणामेव विधेयत्वं बोभवीति । यथा तन्तुवाये नीलपट-वयनं कुर्वति सति कश्चिद् ब्रूयात्, रक्तं वस्त्रं वय इत्यत्ररक्तत्वमेव केवलं विधेयमस्ति न तु पटवयनं विधेयम् तस्य पूर्वमेवविद्यमान-त्वाद् यथा नीलपटवयनकर्तरि तस्मिन् रक्तां शाटिकां वय इतिवाक्ये रक्तत्वशाटिकावयनं द्वयमेव विधेयम् । स्वपन्तं तन्तुवायं कोऽपि कथयेत्, रक्तं पटं वय 'इतिवाक्ये रक्तपटवयनानां सर्वेषामेव

विधेयत्वमवगम्यते । ततश्च यावदेव विधेयं तावत्येव तात्पर्यम् । विधेयञ्च शब्दोपात्तमेवेति सुष्ठूक्तम् शब्दोपात्त एव तात्पर्यम् । उपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे । प्रतीतमात्रे यदि तात्पर्यं स्यात्तदा पूर्वो धावति इत्यदौ पूर्वपदेनापरस्यापि प्रतीतिर्भवति, पूर्वादिसमानसंवित्संवेद्यतया प्रतीते अपरार्थेऽपि क्वचित्तात्पर्यं स्यात् न च पूर्वशब्देन प्रतीतेऽपरार्थे कदाचित् तात्पर्यं भवति । अभिधावादिनो ब्रुवते चेदुपात्तस्यैव शब्दस्यार्थे तात्पर्यं भवति, प्रतीतमात्रे तात्पर्यं नैवास्ति, तदा व्यञ्जनावादिनां मते दोषं दर्शयन्ति ।

यत्तु 'विषंभुङ्क्ष्व माचास्य गृहे भुङ्क्था इत्यत्र त्वत्कर्तृकं विषकर्मकं गृहाधिकरणकमेतद्गृहे भोजनाभावत्त्वम् एवमेतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यम् एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यम् एतद्गृहभोजनाभावरूप एव वाक्यार्थः, इति अतो व्यञ्जनावादिनां मते विषभक्षणवाक्यस्योपात्तत्वादुपात्तस्य शब्दस्यार्थे तात्पर्यमाननाद् विष–भक्षणवाक्येऽपितात्पर्येण भाव्यम् । नेत्थमस्ति । तत्र व्यञ्जनामानिनः प्रतिपादयन्ति । विषमिति वचसि चकार एकवाक्यतासूचकोऽन्यथा तस्य वैयर्थ्यप्रसङ्गात् । न चाख्यातवाच्यक्रिययोर्द्वयोः साक्षादन्वयः सभवति यथा देवदत्तो गच्छति यज्ञदत्तः स्वपिति इति, नकदाचिदनयोरेकवाक्यता संपद्यते । शयानो देवदत्त एव–मुक्तवान् इत्यस्य त्वस्त्येवैकवाक्यता । अतः सुहृद्वाक्यमेतत् कल्पनीयम् । तदनु भाव्यमत्रान्वयेन । विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेन नाङ्गता कल्पनीया इति हेतोर्विषभक्षणवदनिष्टजनकमेतद्गृहे भोजनम् इति सर्वथा मास्य गृहेभुङ्क्था इति वाक्यार्थः संपद्यते । तथा च तद्वाक्यस्य पदोपस्थापिते एव तात्पर्यं सिद्धम् । तस्मात्

यत्परः शब्दः स शब्दार्थः इत्यादि यदभ्यधायि तत्तात्पर्याज्ञानात् । अन्यच्चाप्यभिधावादिभिर्यदभाणि 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाया व्यापारः' तदप्युक्तम् । यतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावत्यर्थे सर्वत्र यदि शब्दस्याभिधैव व्यापारः स्यात्तदा— 'चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी' इति वाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात् पुत्रजन्मश्रवणानन्तरं हर्षोऽनुभूयते । कन्यागर्भश्रवणेन दुःखमुत्पद्यते न च तत्र हर्षशोकादयो वाच्याः । यदि पुत्रजन्मनि हर्षो वाच्यार्थस्तदा तदेव वचो निशम्यारेः कथं दुःखमुत्पद्यते । तच्छ्रुत्वा हर्षानुभवो न भवति इत्यपि वक्तुं न शक्यते तस्यप्रत्यक्षतःसिद्धत्वात् ।

अतस्तदर्थमवश्यमेव निर्विवादं व्यञ्जना स्वीकर्तव्या ।

( क्रमशः )

—*❀*—

# ❀ दुर्भिक्षशङ्का ❀

रे दुर्भिक्ष ! गताब्दमेव भवता संपीडिताः प्राणिनो
नाद्याप्युच्छ्वसिता, मृताश्च बहवः क्षुद्दुर्बलाश्चापरे ॥
अब्देऽस्मिन्नपि किं प्रकाशयसि भोस्त्वं स्वीयचिह्नान्यहो !
भूयश्चेत् समुपस्थितिस्तव तदा सर्वं विनष्टं भवेत् ॥१॥

कथंचित् स्वल्पान्नैर्विपुलजलहीनैश्च गमितं
गतं वर्षं, वर्षे त्विह बहुजलाशान्वितजनैः ॥
परं वर्षेऽप्यस्मिन् नवजलदमालां शतह्रदा-
मपश्यद्भिर्नूनं हृदयपटले तप्यत इव ॥ २ ॥

नभस्यप्यालोक्य प्रचुरमुदिरालीविरहितं
नभो नीलं लोका विदधति निराशां स्वहृदये ॥
क स श्यामो मेघः क च जलसुवृष्टिः क च पुन-
र्महीशस्यश्यामा क च कुसुमशोभा प्रतिदिशम् ॥ ३ ॥

नदी मन्दस्रोताः सरसि न जलं, कूपनिवहा
विशुष्का, नो दातुं कथमपि जलं त्वीशत इह ॥
जलाभावे शस्यं न भवति न चान्नं न विविधं
भवेच्छाकं, भूयः कथमिह भवेज्जीवनमहो ॥ ४ ॥

म्रियन्ते प्रत्यब्दं विविधपशवो दुग्धनिधयो
बलीवर्दाभावे कथमिह भवेत् कर्षणमपि ॥
कृषेरेषोऽभावः क्षपयति जनान् क्षुद्विदलितान्
अहो दुर्भिक्षाख्यश्चरति यमदूतो दिशि दिशि ॥५॥

कथं देहो धार्यः कथय भरणीयाः कथमहो
स्त्रियः, को वा यत्नो भवति संतानोदरभृतौ ॥
पशुभ्यो लभ्यं स्यात् कथमिह जलं वा तृणदलम्
अहो चिन्ता सेयं कृषकगणचेतो व्यथयति ॥ ६ ॥

यदि स्याद् दुर्भिक्षं प्रथमदुरवस्था प्रदलिते
भुवः पृष्ठे सृष्टिः कथमिव प्रवृत्ता भवति ते ॥
अभावे सृष्टेस्त्वं कथय कथनीयः कथमहो
जगत्स्रष्टा ? तस्माद् दमय दुर्भिक्षं पदकृते ॥ ७ ॥

ततश्च

प्रगर्जद्मेघान्तर्गतचपलविद्युत्कृतमहा-
प्रदीप्तिस्फूर्जासंभवदतिसुचक्षुःश्रुतिहति ॥

जगद् भूयोऽप्येतत् प्रविशतु हि भूमिष्ठजलधौ
विधे सिद्धयेद् यस्मात् तव विकटशक्तिश्च करुणा ॥८

प्ररोहा जायन्तां भवतु तरुशाखासु विविधा
फलानां पुष्पाणां ततिरिह खगाः सन्तु मुदिताः ॥
जना भुक्त्वा पीत्वा परमपरितुष्टास्तव सदा
प्रगायन्तः स्तोत्रं विदधतु कृतिं तेऽतिसफलाम् ॥ ९ ॥

—संपादकः ।

## "सर्वकर्मस्वादौ गणेशपूजनरहस्यम्"

( ले० योगीन्द्रशर्मा, ऋषिकुलं हरिद्वारम् )

अयि सुरगवीसमुपासनापवित्रीकृतान्तःकरणाः, सारासार-विवेकनिपुणा विचक्षणाः! यदा कस्मिंश्चित्पर्वणि व्रतादौ वा सर्वप्रथमं गणेशपूजनञ्जनैः क्रियते तदा जनानां हृदयपटलमनेक-विधशङ्काकलङ्काङ्कितञ्जायते तद्यथा सर्वकर्मस्वादौ गणेशपूजनं कथं, गणेशप्रधानककर्मणि पृथगङ्गरूपेण गणेशपूजनम्भवितुमर्हति नवा, गणेशस्तु शिवपुत्रस्तर्हि शिवविवाहे गणेशपूजनमभून्नवा, गणेशस्य गजाननत्वं, लम्बोदरत्वं, चतुर्भुजत्वं, मूषकवाहनत्वञ्च किमर्थमिति पूर्वोक्तानां विशयानां समाधानं युक्तिशास्त्राद्यनुसारेण क्रमशः प्रद-र्श्यते । तत्र प्रथमप्रश्नस्य समाधानं—यथा कस्याञ्चित्सभायां शिष्यैः सह गुरुरागच्छेत्तत्र प्रथमं गुरुमसत्कृत्य शिष्यगणमेव सत्कुर्याच्चे-त्तर्हि शिष्यगणस्तं सत्कारं तिरस्कारमेव मन्येतैवं विष्णुस्वरूपि-श्रीगणेशपूजनं कर्मादावकृत्वा देवतान्तरपूजनं क्रियेतचेत्तर्हि देवग-णस्तेन पूजनेन प्रसादमनधिगतो मन्येऽशुभफलमेव यजमानाय प्रय-

च्छेदतः कर्मादौ गणेशपूजनम् । अधोनिर्दिष्टवेदमन्त्र इममेव विषयम्प्रमाणीकरोति ''निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋतेत्वत्क्रियते किञ्चनारे-महामर्कं मघवञ्चित्रमर्च ॥ (ऋ० अ० ८ । अ० । ६ व० १३ ) मन्त्रार्थः हेगणपते ? गणानाम्पिपीलिका, कीट, पक्षि, पशूद्भिज्ज, मनुष्य, पिशाच, राक्षस, यक्ष, गन्धर्व,र्षि, पितृ, देवानामीश परमात्मन् त्वं ममयज्ञे स्तोतृगणेषु मध्ये सर्वतः प्रथमं निषुसीद सुष्ठुनिषण्णोभव यतोयुगपदतीतानागतदूरेवर्तिपदार्थज्ञातृणां कवीनाम्मध्ये त्वामेव विप्रतमम्मेधाविनं सकलाभिलाषपूरकं वा ऋषय आहुः। हे गणपते त्वदृते किञ्चन श्रौतं स्मार्तं वा कर्म आरे दूरे समीपेच नक्रियते जनैः । एवन्त्रिभिः पादैः प्रत्यक्षतया गणेशं स्तुत्वा चतुर्थपादेन परोक्षतया स्तौति तद्यथा हेमघवन् धनवन् इन्द्रमहां महान्तमर्कमर्चनीयन्त्रिवृदादिस्तोत्रमर्च गणेशमुद्दिश्य प्रोच्चारयेतिप्रथमप्रश्नस्य समाधिः । अथद्वितीयप्रश्नस्य समाधानमुच्यते यावन्मनुष्याणाम्भदेबुद्धिर्ननिवर्तते तावत्तेषां कर्मकाण्डेऽधिकारः, अयम्भावः पूज्यपूजकभेदं, ब्राह्मणत्वादिजातिभेदं, ब्रह्मचर्याद्याश्रमभेदं, घृतपुरोडाशादिद्रव्यभेद, मिन्द्राग्न्यादिदेवताभेदं, विना कर्मकाण्डन्न भवितुमर्हति यथा च द्वादशाहसत्रे ये यजमाना तएव कालभदेन नामभेदमवाप्य ऋत्विक्कार्यं यजमानकार्यञ्च सम्पादयन्ति, यथाच नाटकादावेक एवाभिनेता कालभेदेन प्रधाननायककृत्यं, गौणनायककृत्यञ्च सम्पादयति एवमेक एव परमेश्वरो गणपतिमहागणपतिविनायकसिद्धविनायकाद्यनेकनामान्यवाप्य कालभेदेन नामभेदेन चाङ्गापूर्वम्प्रधानापूर्वञ्च सम्पादयतीत्यतो गणेशप्रधानककर्मण्यपि पृथगङ्गरूपेण गणेशपूजनेन भवितव्यमिति नः प्रतिभाति. अतएव कात्यायनश्रौतसूत्रे अग्निदेवताप्रधानकाग्न्याधानकर्मण्यपि एकस्यैवाग्नेः पवमान पावक शुचिनामभिर्भेदमास्थाय

अङ्गरूपेण तिसृणामाग्नेयीष्टीनाम्प्रतिपादनमपि सङ्गच्छते अन्यथाऽ-ग्नेरेकत्वेन पृथगङ्गरूपेणेष्टित्रयविधानमसङ्गतं स्यादितिविभावनीयम् अधस्तन ऋग्वेदीयमन्त्रोऽपीममभेवाभिप्रायम्पोषयति ' इन्द्रम्मित्रं वरुणमग्निमाहुरथोदिव्यः स सुपर्णोगुरुत्मान् । एकं सद्विप्रा बहुधा-वदन्ति अग्निंयमम्मातरिश्वानमाहुः ॥ (ऋ० पृ० ११६४ । ४६) अथ तृतीयप्रश्नस्य समाधानमुच्यते–महागणेशः साक्षात्कृष्णस्वरुप-एवास्ति, उक्तञ्च ब्रह्मवैवर्त्तमहापुराणे गणेशखण्डे "गणेशरूपः श्रीकृष्णः कल्पे कल्पे तवात्मजः । त्वत्क्रोडमागतः क्षिप्रमित्युक्त्वा–ऽन्तरधीयत ॥ ८२ ॥" इति, अयम्भावः–यथास्य ब्रह्मणो विष्णु-ब्रह्ममहेशा गुणावताराः,रामवामनादयोंऽशावतारा, दुर्गादयः शक्त्य-वतारा, स्तथैव विनायकगणेशादयो ज्ञानावतारा, अतः शिवविवाहे-ऽपि कल्पान्तरीयविनायकाद्यन्यतमः कश्चिद्विघ्नविनाशको देवोऽव–श्यमेवासीद्यस्य पूजनं शिवविवाहेऽभूत् श्रीगणेशस्य परमात्मबोध–कत्वेऽधस्तनवेदमन्त्र एव प्रमाणम् । "गणानान्त्वा गणपतिऽ०हवा-महे प्रियाणान्त्वा प्रियापतिऽ० हवामहे निधीनान्त्वा निधिपतिऽ० हवामहे व्वसोमम ॥' आहमजानि गर्ब्भधमात्त्वमजासि गर्ब्भधम् ॥ १ ॥ (य० अ० २३ । ) अस्य मन्त्रस्याध्यात्मिकोऽर्थः प्रदर्श्यते हे अश्व सर्वव्यापक परमात्मन् गणानाम्पूर्वोक्तानाम्मध्ये–गणपतिं गणपालकं त्वा त्वां हवामहे रक्षार्थमाह्वामः, प्रियाणा–म्मध्ये प्रियपतिम्प्रियपालकन्त्वा त्वां हवामहे, हेवसो जगन्निवास त्वम्ममपतिर्भूया इतिशेषः ॥ हे अज ! ब्रह्मन् ! त्वं गर्भधम् गर्भधा-रकम् आसमन्तत् असि अतः गर्भधन्त्वा त्वामहम् आसमन्तात् अजानि प्राप्तवानि । परमेश्वरस्य गर्भधारकत्वं गीतादौ प्रसिद्धम् तद्यथा ममयोनिर्महद्ब्रह्म तस्मिन् गर्भन्दधाम्यहम् । सम्भवः सर्व–भूतानान्ततो भवतिभारत ॥ ( गीता० अ० १४ । श्लो० ३ )॥

अथ चतुर्थप्रश्नस्य समाधानमुच्यते मनुष्येषु यः स्थूलशिरस्को लम्बोदरो वा सोऽतिबुद्धिमानित्यापामरप्रसिद्धवचोरहस्यञ्च स्थूलशिरस्कस्यातिबुद्धिमत्वे बहुमस्तिष्कत्वं, लम्बोदरस्यचातिबुद्धिमत्वे "अन्नमयंहिसौम्य मनः" इति छान्दोग्यश्रुत्या वह्वन्नभक्षकत्वम्प्रतीयते तद्वत्पशुषु मूषकस्य शतमुखविलकरणादिव्यापारेणातिबुद्धिमत्वंलोके, पञ्चतन्त्रादिनीतिशास्त्रे च प्रसिद्धमेव तथा च गणेशेन स्वस्य विष्णोर्ज्ञानावतारत्वसूचनाय गजाननत्वं, लम्बोदरं, मूषकवाहनत्वं, चतुर्विधपुरुषार्थप्रदत्वसूचनाय चतुर्भुजत्वञ्च स्वीकृतमितिसुधीभिर्विभानीयमित्यलम् ॥

---

## सुहृत्समागमः ।

( लेखकः-कांकरोलीस्थ पु० लक्ष्मीनारायण शास्त्री पालीवालः )

अहह ! समागत एव प्रियसुहृन्मम रत्नाकरः ।

ननु भोः ! प्रतिमासं प्रियसुहृदा रत्नाकरेण सह संगच्छतोऽपि कथमिव सविशेषुमुत्कण्ठितमिव मे मनः ? किं रत्नाकरेण स्वकीय आकरे पुष्टिकरीकृता ? उतस्वरूपमेव परिवर्तितम् ? अहोस्वित् काचिन्नूतनतैव गृहीता ? अथवा अहमेव कश्चिद् द्वितीय इव भवामि ? 'येन परिवृत्तदृष्टिरहमेवैनमितरमिव पश्यामि ।' यत औत्कण्ठ्यस्य सामञ्जस्यम् । विचार्यमाणे तु नास्ति द्वयमपि । तथाप्यद्यतु उत्कण्ठितमेव मे मनः ।

अद्यावधि प्रियसुहृदि रत्नाकरे मूक एव आसीन्मदीयः प्रेमा । अयमपि प्रेमबन्धानुबन्धमनुसरन् प्रतिमासं यत्र क्वाऽप्यहं तिष्ठामि तत्रैव समागच्छति । किन्तु न कदाचिदप्यनेन सह एकान्त-

मङ्गीकृतम्, नास्य सरसमधुराः प्रेमालापाः कर्णपुटकेनास्वादिता, न च स्वकीयं हृदयमेवैतस्य पुरतः स्थापितम्। हन्त ! अद्य प्रियसुहृदा सह एकान्तमङ्गीकरोमि पृच्छामि जीवनवृत्तम्, कथयामि च किञ्चिदात्मनोपि। मित्र रत्नाकर! अस्त्यावयोः सम्बधन्स्तु कश्चिन्नूतन एव। तथापि त्वदीयो मयि स्नेहः काञ्चित् परामेव काष्ठामधितिष्ठति। स्वदेशे वा यत्र क्वाप्यहं तिष्ठेयम्, अन्विष्यन्नेव त्वं तत्रैव मामुपविष्ठसि। उपस्थाय चमां त्वं कदाचिन्महर्षिप्रवर इव परमतत्त्वमेव विवेचयसि कदाचिद्विद्वरिष्ठ एव धर्ममर्मैव मीमांससे कदाचित् कविवर इव रसमयीर्विविधाः कविता एव कलयसि, कदाचित् सुधारक इव देशकालानुकूलाः सुधारप्रक्रिया एव बोधयसि कदाचित्च उपदेशद इव उपदेशकुशला विचित्राः कथा एव कथयसि। नैवं सर्वदा पण्डितंमन्यइव पाण्डित्योद्घाटनपर एव प्रतिष्ठितम्मन्य इव भावगम्भीर एव च तिष्ठसि। किन्तु मित्रगोष्ठ्यामागतःकदाचित परिहासपेशल इव विविधाः परिहाससूक्तीरप्युद्गिरसि, कदाचित च बालक इव त्रुट्यकलपदा गिर एवोत्सृजसि। किं बहुना, कदाचित् क्रीडापर इव विशृङ्खलानि मदीयवचांस्यप्यनुवदसि कथमिवोच्येत स्नेहश्लक्ष्णस्तावकः पावनो व्यवहारः ?

किन्तु रत्नाकर! एतत तु प्रदर्शय—यदा त्वं रत्नानामाकरः, रत्नान्यपि च संस्कृतानि, तदा त्वं कथं न हृष्टोऽसि, ? कथं न पुष्टो भवसि ? कथं च स्वकीयान् दीपप्रकाशरोचिष्णून् रत्ननिकरान् निखिलेऽपि वसुन्धरावलये परितो न प्रकिरसि ? योहि रत्नवान् भवति स सर्वदैव प्रसन्नमुखमण्डलो विकसदङ्गलावण्यविन्यासोपचितिश्च भवति, रत्ननिचयांश्चाऽपि स्वकीयान् देशेषु देशान्तरेषु

च प्रसारयत्येव । किन्तु त्वयि तु तत् त्रितयमपि नास्ति । कथमेवम्? आम्! ज्ञातम्!! त्वं गर्ह्यां वृत्तिमपि नाश्रितः न कृपणः, न च संचित-संरक्षणशील एवाऽसि । किन्तु त्वं रत्नानावविक्रेता मनस्वी, वसुधैव कुटुम्बकमितिमानी च वर्तसे । अतएव ग्राहकाणामभावेऽपि दान-व्यसनविवशस्त्वं कानिचिद् रत्नानि तु जनतायां प्रतिमासं वित-रस्येव । किन्तु नैतेनैव जीवनस्य सुखमयत्वसिद्धिः । यतो हि यदा रत्नानां ग्राहका एव न स्युः, तदा किं त्वं कुर्याः? त्वं काचाँस्तु नैव रक्षसि, येन रत्नानां ग्राहकाभावे काचरुचिषु जनेषु काचशकलान्यपि विक्रीय स्वीयं जीवनं सुखमयं कुर्याः। किन्तुत्वन्तु रत्नाकरः! त्वत्सविधे रत्नानि सन्ति!! यदा रत्नानां ग्राहका अपि न स्युः तदा यस्य कस्यापि-रत्नाकरस्य रत्ननिधेर्वास्तु-जीवननिर्वाहे क्लेश एव । क्लेशकृशानुना च हृदये ज्वलति कोऽपि कथं हृष्टः स्यात्, कथं च पुष्टः ?

सर्वथा तव ग्राहका न सन्तीत्यपि न. किन्तु सन्त्येव कतिचित्-तेऽपि न साधारणा एव, किन्तु धनिनो मानिनः पण्डिताश्च । तथापि किंतेन; ते ग्राहका भूत्वा कानिचिद् भूतलभूषणानि विहाय कदाचिदापत्समयोचितं तव साहाय्यमपि कुर्वन्ति? आस्तां साहाय्यं तावद्दूर एव कुशलमपि ते पृच्छन्ति कदाचिदपि महानुभावाः? अत एव त्वमपि उन्मना इव प्रायेण रत्नानि खण्डश एव कृत्वा जनेषु वितरसि न तु यथावस्थितानि पूर्णत्वप्रभाभास्वराणि। उचितं च तवाऽप्येतत् ।

किं कुर्याम्? अहं नास्मि तादृक्समर्थः अन्यथा त्वां तथा परि-चरेयम्, यतस्त्वमपि सुपुष्टकमनीयकलेवरः सन् सोत्साहं निखि-लेऽपि वसुन्धरावलये सत्वरगत्या परिभ्रमेः । ग्राहका न भवेयुर्नाम,

किन्तु पात्रेषु तु स्वकीयानि प्रोद्दामप्रभाभास्वराणि रत्नानि प्रक्षिपेरेव। तथा सति औदार्यप्रसक्तमानसस्य सवाऽपि हृदये कथं न हर्षातिरेकः प्रादुर्भूयात्, कथं च मुख मण्डलं सविलासहास सुषमासुशोभितं न स्यात् ? किन्तु स्यादेव। संभवत्यपि सर्वेषामेवैतत् स्वभावानुसारिणां स्वस्य कार्याणां सफलतायां सत्याम्।

( शेषं पुनः )

—:०:—

पञ्चाङ्गेषु अयनविषयीभूतो लेखः साम्प्रतमत्यन्तोदुर्व्यवस्थो दृष्टिपथमवतरति, पौर्वापर्य्यपर्य्यालोचनया प्रबन्धसंवादगवेषणया च तत्राङ्कितलेखोऽनार्षशङ्कासमाधिकोटिं गमयति। एतद्दुर्व्यवस्थामूलोन्मूलनाय अत्रेमां समाधिसरणिं पश्यामः। नामैकदेशन नाम ग्रहणमितिन्यायेन अयनशब्दोऽयनांशपरः, नामान्वर्थतया नह्यैनांशैर्विना अयनंभवितुमर्हति ।

अयनांशाः प्रदातव्या लग्ने क्रान्तौ चरागमे।
सात्रिभे वित्रिभे लग्ने अयनेषु च सर्वदा॥

तावदेतज्ज्ञानाय पञ्चाङ्गनिर्म्मित्यभ्यासोऽप्यावश्यकस्तंविना उत्तरायणदक्षिणायनादिज्ञानं दुर्घटम्, कर्कसङ्क्रान्तितो दक्षिणायनारम्भो मकरसङ्क्रान्तितश्चोत्तरायणरम्भोङ्गीक्रियेत चेत्तदा "तथाऽयनांशाः खरसाहताश्च स्पष्टार्कगत्या विहृता दिनाद्यैः। मेषादितः प्राक् चलसङ्क्रमाःस्युर्दाने जपादौ बहुपुण्यदास्ते" अन्यच्च—अयनांशसंस्कृतो भानुर्गोलेचरति सर्वदा। अमुख्या राशिसङ्क्रान्तिर्मुख्यस्तु चलसङ्क्रमः" अन्यच्च—दिनरात्रिप्रमाणानां निर्णयोन भसङ्क्रमात्। यतः सकलकर्म्माणि पुण्यतश्चलसङ्क्रमात्" अन्यच्च—चलसंस्कृततिग्मांशोः सङ्क्रमो यः सुसङ्क्रमः। अजागलस्तनस्येव राशिसङ्—

क्रान्तिरुच्यते" इत्यादिवचांस्यनर्थकान्यापद्येरन् । द्वादशसङ्क्रमणाना-
म्मध्ये कर्कमकरमेषतुलानामेव मुख्यता, अत्र कर्कमकरमेषतुलाः
सायनविशिष्टकर्कमकरमेषतुलानामुपलक्षकाः, समरात्रिदिनेकाले
विषुवद्विषुवञ्च तत् अनेन मेषतुलयोर्दिनरात्रिसाम्येनैव भाव्यं परञ्च
मेषतुलयोर्न दरीदृश्यते तत्समानत्वं कुत्रापि प्रत्युत सायनमेषतुलयो-
स्तत्समानत्वमुपलभ्यते, पलभाया नामांतरं विषुवत्प्रभा वर्तते सापि
विषुवत्प्रभा सायनमेषसंक्रान्तौ संसाध्यते नतु मेषसंक्रान्तौ साय-
नकर्कसंक्रान्तितोदिनह्रासः सायनमकरसङ्क्रातितो दिनवृद्धिर्यत
उपलभ्यतेऽतः सायनकर्कसङ्क्रान्तितो दक्षिणायनं सायनमकरसंक्रा-
न्तितश्चोत्तरायणमेवामगम्यम्, अन्यथा कर्कसंक्रान्तितो दिनह्रा-
सेन मकरसंक्रान्तितश्च दिनवृद्ध्या भाव्यम् । हौरिकैस्तुदिनवृद्ध्याः
कथितञ्चोत्तरायणम् ॥ कैनाशञ्चायनं प्रोक्तं दिनह्रासात्सुपुण्यदम्'
अनेनापि चलसंक्रमत एव दक्षिणानोत्तरायणेऽवगम्ये आग्रह-
वतोनुकूलयितुं विधात्रापि । न पार्य्यते मादृशानांतु का कथा ॥

निर्णायकः पञ्चनददेशान्तर्गतपटियालाराजधानीवास्तव्य-
स्वर्गीयदैवज्ञ कन्हैयालालतनुजः पञ्चाङ्ग-
सम्पादको दैवज्ञमोतीरामः

---

## भारते-

### श्रीरघुनाथ सं० विद्यालय सूरजगड जयपुर ।

( ले० शिवरामशर्मा साहित्याचार्यः )

( १ )

हे हे ! भारतवीरमण्डल ! मुधा किं साम्प्रतं सुप्यते-
यन्नो रत्नचयं हरन्ति कितवः सम्मोह्य नः कैतवैः ।

यस्यां सत्स्मृतयः पुराणनिचयः प्राणाधिका वा श्रुतिः
हा ! धिक् सा सुरभारती गतरसेवाद्यास्तियद् भारते ॥

( २ )

निःसारा विहिता परैः परमहो ! पूर्वं—ततः खण्डिता—
एवञ्चापि सुधैर्यतः स्वतनयानाकांक्षमाणा स्थिता ।
मुञ्चन्त्यश्रुकणान्–हताशहृदया रे निर्दयाः । साम्प्रतम्—
सा नः पादहता सुगौरिव गिरा+ तिष्ठेत् कथम्भारते ॥

( ३ )

अस्मिन् वेदनिधिबभूव स विधि र्मान्या वसिष्ठादयो–
वाल्मीकिः प्रथमः कविः सुमतिमान्-श्रीजैमिनिर्वा सुधीः ।
यत्र श्रीभरतश्च पाणिनिरभूत्–गीर्वाणवाणीचणो–
हा ! तत्राद्य पठन्ति तत्सुतनया भाषाम्पराम्भारते ।

( ४ )

उत्तिष्ठन्त्वरमद्य भारतजना नेयं सुनिद्राघटिः—
बद्ध्वा तत सुदृढन्निजम्परिकरन्तालध्वनिर्ध्वन्यताम ।
जित्वा तर्जनगर्जनैररिजनान् सा सेव्यताम्भारती—
भव्येयम्पुनरप्यहो ! नवरसा भायाद्यतो भारते ।

किम्बहुना—इदमपि मदुक्तं भवेत्—इह

( ५ )

विप्रा वेदविदो भवन्तु नितरां क्षात्रान्विताः क्षत्रिया
वैश्याः सद्धनिनश्च ते हरिजना सेवापराः सर्वदा ।
यज्ञाः सन्तु निरामयाय सततं काले पयोदागमः—
वीराः सन्तु परोपकारकरणे श्रीभारते भारते ॥

॥ शुभम् ॥

+ एतत्–भागुरिमतेटापिसो ज्ञेयम् ।

# हुताशनश्चन्दनपङ्कशीतः

( १ )

भूपान् विलोक्याऽत्र* हतप्रभावान्—द्विजान्दयाधर्मनिरादरान् वा
मन्ये कलिद्रावमुपेत्यजातो—" हुताशनश्चन्दनपङ्कशीतः" ।

( २ )

हे हे नृपाः ! स्थाऽ*नमिदं सुपूतम्—विन्नम्परैः किन्न दुनोति चेतः
म्लानाः कथं वीरसुताः ! "नु कच्चित् ? "हुताशनश्चन्दनपङ्कशीतः"

( ३ )

इमाम्पुरा वेदविदाश्रितान्ते—भूपाः सुभूमिम्बिभराम्बभूवुः ।
विधीयते किन्तदपालनाद्भोः ! हुताशनश्चन्दनपङ्कशीतः

राजस्थानभूमिंप्रति—

( ४ )

धैर्यन्निजन्नाद्य जहीहि मातः ! सुतास्त्वदीयाः सततं यतन्ते
वामे विधौ सोपि भवेत् सुतेजा--हुताशनश्चन्दनपङ्कशीतः ।

---

# मनुजस्य मुख्यकर्तव्यं किमितिविचारः

( ले० भक्तवरश्रीमथुराप्रसादमहोदयः )

शास्त्रप्रतिपादितविधिनिषेधादिप्रमाणानि तिरस्कृत्य पौष्टिकपदार्थसंसेवनेन शरीरपुष्टिद्वारा विषयानंदोपलब्धिः, पाश्चात्यशिक्षाप्रणालीमनुश्रित्य विद्याऽध्ययनेनोच्च पदाधिकारान् प्राप्य च पुष्कलधनोपार्जनं, कलाविज्ञानादिना च नूतनाविष्कारद्वारा प्रख्यातकीर्तिलाभश्चैतावन्मात्रमेव

---

* अत्र राजस्थाने । * राजस्थानम् ।

मानुषजन्मसाफल्यं तदर्थमेव प्राचुर्य्येण प्रवृत्तिरिति विद्यमाननवशिक्षित-सभ्यजनतामते मानुषमुख्यकर्तव्यतेति–

परन्तु शरीरस्वास्थ्य यथेष्टपुष्टिर्वा प्रयत्नसाध्या नैव दृश्यते युक्ताहार-विहाराणां पथ्यसेविनामपि व्याधिग्रस्तत्वेन दैवाधीनमेव स्वास्थ्यमिति स्पष्टमनुमीयते–

अभीष्टपुष्ट्यादिलाभार्थमार्यपथं च हित्वाऽभक्ष्यपदार्थग्रहणेन या पापा-चरणे प्रवृत्तानां भोजनभट्टानामपि विषयेष्वानंदबुद्धिः केवलमज्ञानमूलैव–

वस्तुतो विषयाः समस्ता नैवानन्दप्रदा :–

तत्सम्यग्विविच्यावधार्यतां–खाद्येकस्मिँश्चिन्मिष्टान्ने विभिन्ना रुचि-र्दृश्यते मनुष्याणां-कोऽपि भुक्त्वा कलाकंदाख्यं मिष्टान्नमतिप्रसन्नो भवति कोपि तस्मिन्नरुचिंमन्यो लवणादितीक्ष्णवस्तुसमुत्सुको निन्दति तत्-तथैव कमपि शब्दं कोपि चेतःप्रसादहेतुं मत्वा प्रशंसत्यन्यस्तस्मिन् घृणां प्रकटयति–

स्त्रीसौन्दर्य्ये आसक्तः कोऽपि यक्ष्मादिरोगपीडितां त्वगस्थिमात्रा-वशिष्टगात्रां तामेवावलोक्य नेच्छति तद्दर्शनमपीत्याद्यनेकोदाहरणैर्विषयेषु न कदापि सिध्यति सुखं–किन्तु विवेकहीनानामेव तत्र सुखबुद्धिरिति स्पष्टमेव—

विषयेष्वानन्दाभासकारणं तु मनसः स्थैर्यमेव-यथाहिकस्यचित् प्रिय-पुत्रस्य मित्रस्य वा विदेशनिवासावस्थायामतिव्याकुलं मनस्तत्प्रत्यागमनसमये विक्षेपनिवृत्त्या स्थिरं भवति तदा तदात्मानंदस्य प्रस्फुरता जायते तत्वानभि-ज्ञजनस्तमात्मानंदं विषयजन्यं मन्यते तथा भ्रमबुद्ध्या स स्वपुत्रं मित्रंवा सुख-जनकं जानाति। तत्वविदांदृष्ट्यातु तत् सुखं न पुत्रमित्रादिविषयजन्यंकिन्तु मनश्चाञ्चल्यनिवृत्तिजन्यं स्वात्मसुखमेवेति—

विद्याऽध्ययनं केवलं धनोपार्जननिमित्तं नैव मुख्यकर्तव्यान्तर्गतं-किंतु

वास्तविकसुखप्राप्त्यर्थमध्यात्मविद्याया अत्यावश्यकता-तदभावेव्यर्थमेव प्रयास इति-नूतनाविष्कारैर्याकीर्तिः सा अचिरस्थायिन्येवमितान्तं नवविचि-परमसभ्याभिमानिनां मते यद्यन्मानुषकर्तव्यं तत्सर्वमकिञ्चित्करमेवेतिसिद्धम्

सनातनमहतां मते स्वात्यन्तिकदुःखनिवृत्तिपरमानंदलाभार्थं च निगमागमनिर्दिष्टसाधनेषु प्रवर्तनमेव मानुषजन्मसाफल्यसंपादन तदेव प्रधान-कर्तव्यं मनुजानामिति-

तत्रापितपः स्वाध्याययज्ञदानादिसाधनबाहुल्यदर्शनात् संप्रति श्रेयः प्राप्तिसुलभसाधनान्वेषणावश्कता—ऽअत सर्वोपनिषत्सारः स्वयं श्रीकृष्ण-प्रतिपादितगीतोपदेश एव शिरोधार्यः प्रतीयते-

तेन च भगवतः शरणागतिरेवचर्मोपदेशः सर्वदुरितध्वंसिपरमानंद प्रदश्रेयस्करः सिद्ध्यति-

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेयनाय-

ऋतेज्ञानान्न मुक्तिरित्यादिश्रुतिभिः केवलं ब्रह्मपरिज्ञानमेव मुक्ति-साधनं नान्यदिति यदद्वैतवादिनां कथनं तत्र चिन्तनीयमेतत् खलु कस्य चित्सम्राट्चक्रवर्तिनः परिज्ञानमात्रेण कार्यसिद्धिः केनापि क्वचिदवलोकिता जगति नैवेति-उपसमीपेच आसनं स्थितिरितिव्युत्परया, उपासनमेवेष्टसाधकं संभाव्यते-

इष्टदेवपरिज्ञानं विना तत्सीपे स्थितिरपि न संभवतिपरम्परासाधनमिष्ट-परिज्ञानमितिवक्तुंशक्यते-श्रुतितात्पर्यमप्येतावन्मात्रमेव- यदिष्ट देवज्ञान-मत्यावश्यकं-परन्तु साक्षाद्भगवत्प्राप्तिकारणं भक्तिरेवेति-

तत्र च भक्तिप्राधान्यप्रतिपादकशास्त्रेष्वात्मनिवेदनंयन्मुख्यतममुक्तं तदेव शरणागतिप्रतिपत्तिपुष्ट्यादिशब्दैर्व्यवह्रियते यथाहि-

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्-

( क्रमशः )

—॥❀॥—

# जगन्मिथ्यात्वनिरूपणम् ।

( साधुप्रज्ञानाथविरचितम् उत्तरकाशी )

सर्वेषामेव भावानां साश्रयत्वेनहेतुना ।
प्रतियोगित्वमत्यन्ताभावं प्रतिमृषात्वता ॥ १ ॥

अधिष्ठाने कदाचिद्यद्भानं कस्यापि वस्तुतः ।
निषेधप्रतियोगित्वं मिथ्यात्वमिति निश्चितम् ॥ २ ॥

सदसद्भ्यां न निर्वाच्यं बाध्यत्वादीक्षणादपि ।
ज्ञाननिवर्त्यहेतुत्वान्मिथ्यात्वं परिकीर्तितम् ॥ ३ ॥

दृश्यत्वाच्च जडत्वाद्वा परिच्छिन्नत्वहेतुतः ।
ससम्वन्धमिदं दृश्यं न नित्यमिति निश्चिनु ॥ ४ ॥

नाशित्वादादिमत्वाच्च ससत्ताविरहादपि ।
प्रत्यक्षमपि प्रपञ्चं न सत्यं सुविचारतः ॥ ५ ॥

साक्षिभास्यमिदं सर्वं स्वप्नवच्च शाश्वतम् ।
साक्षिभास्यस्य मिथ्यात्वं स्वप्ने स्पष्टं प्रतीयते ॥ ६ ॥

'अज्ञानसम्भवमिदं जगदित्यवेहि,
नास्यापरं किमपि कारणमस्ति सत्यम् ।
सत्ये हि शुक्तिशकले स्फुरतोऽपरोक्षं,
रूप्यस्य कोऽन्वनवबाध्यमपास्यहेतुः (?) ॥
(संक्षेपशारीरके)

वाध्यत्वादस्य मिथ्यात्वं यन्नैवं तन्नवै तथा ।
शुक्तौ रजतवद्भानं यथानुमानमीक्ष्यते ॥
उपाधियोगतः साध्यं भवेत् सर्वं चराचरम् ।
साधनादिष्टसिद्धि र्हि मिथ्यात्वे निश्चिता प्रमा ॥

सत्येन वा न सत्येन निरूप्येत जगद्यदि ।
तदाऽस्य कारणं किञ्चित्पर्यालोच्येत साधुभिः ॥
अधिष्ठानं विना नास्ति ज्ञानमन्यदिहेप्सितम ।
प्रतीतिमात्रमित्येतन्न सत्यं विद्धि निश्चितम् ॥
प्रकाशविरहादस्य सत्ता न विद्यते पृथक ।
जडस्य भानमात्रत्वान्मिथ्यात्वं खलु जायते ॥
प्रकाशजडयोः किन्तु सम्बधोऽपि सुदुर्लभः ।
अन्योन्याध्यासमात्रेण व्यवहारोऽत्र सिध्यति ॥
अधिष्ठानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ।
अध्यस्तस्य कुतस्तत्त्वं जगन्नास्ति ततो ध्रुवम् ॥
अध्यासादन्यसम्बन्धो न कोऽप्यत्र प्रसज्यते ।
संयोगः समवायोवा तादात्म्योऽपिन सम्भवः ॥
अद्रव्यत्वान्न वा तस्य संयोग उपपद्यते ।
गुणाश्रयस्य वस्तुत्वं निर्गुण ब्रह्म निश्चितम् ॥
समवायोऽपि सम्बन्धश्चिज्जडयोः सुदुर्लभः ।
गुणगुण्यादिसम्बन्धाः कार्यकारणतादयः ॥
निर्गुणे निर्विकारे च विद्यन्ते नेह केचन ।
परस्परविरुद्धत्वात्तादात्म्योऽपि न सम्भवः ॥
विषयविषयीभावो मूलसम्बन्धपूर्वकात् ।
अतिप्रसङ्गतो नास्ति निर्विकारे परात्मनि ॥
अतश्चिज्जडयोरत्र ह्याध्यासिको भवेत्खलु ।
सम्बन्धः रज्जुसर्पादौ यथैवेह प्रदर्श्यते ॥
अध्यस्तं तु भवेन्मिथ्या सम्बन्धोऽपि तथैव च ।
लोकवद्व्यवहारार्थं सम्बन्धादि प्रकल्प्यते ॥

( क्रमशः )

## ॥ संवादाष्टिपण्यश्च ॥

जयपुरराजकीयप्रधानमन्त्री श्रीटाडमहोदयोऽत्रत्यावायुजलयोः स्वास्थ्यानानुकूल्यात् स्वयमेव त्यागपत्रं समर्प्य प्रयात इति श्रीमान् महाराजः स्वयमेव राजकार्याणि पश्यतीति महान् परितोषः प्रजा-जनानाम । यतो राष्ट्रस्य संग्रहो राज्ञा स्वयमेव कर्तव्यः । तथा चोक्तं महर्षिप्रवरेण श्रीमनुना—

राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ।
सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥

राष्ट्रस्य संग्रहश्च स्वयमेव राज्ञा राजकार्याण्यवलोकयितुं प्रवृत्ते, भवति ।

यद्यपि—

अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किन्तु राज्यं महोदयम् ॥

इति मनूक्त्या मन्त्र्यादिवरणं परमावश्यकं तथापि सर्वेषु प्राधान्यं राज्ञ एव । तथा चोक्तं तेनैव—

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥

भगवान भूतभावनो महाराजाय तादृशं बलं सद्बुद्धिं च दद्याद्यथा स सुव्यवस्थितशासनव्यवस्थां कृत्वा प्रजाजनानां संतोष-पात्रतामापद्येत ।

राजन् राघव वंशभूषणमणे सन्नीतिरत्नाकर
विद्याकैरविणीविकासनविधो शौर्यप्रतापोष्णगो ! ॥
पूर्णाः सन्तु मनोरथास्तव सदा तुष्यन्तु सर्वाः प्रजाः
कीर्तिस्ते कमनीयकान्तिरखिले व्योत्स्नायतां मण्डले ॥१॥

———

—संपादकः ।

# संस्कृतरत्नाकरस्य नियमाः

१—पत्रमिदमखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य मुखपत्ररूपेण प्रतिसौरमासारम्भ एव प्रकाश्येत। यैर्ग्राहकैः सौरमासस्य पञ्चदशं दिवसं यावत्पत्रं न लभ्येत, तैस्तस्मिन् मास एव कार्यालये पत्रं प्रेष्य कारणं मृग्यम्। मासान्तरे कस्याप्यभियोगो नावधेयः स्यात्।

२—अत्र शास्त्रीयाः, धर्मदर्शनविज्ञानादिविवेचनापराः, विनोदोपयुक्ताः, शिक्षापद्धतिपरिष्कारविचारकाश्चेत्येवंविधाः केवलं साहित्यसम्बन्धिन एव निबन्धाः काव्यानि च प्रकाश्येरन्।

३—अतिविस्तृताः विवादपराश्च निबन्धा नास्मिन्पत्रे स्थानं लभेरन्। प्राप्तानां लेखानां प्रकाश्याऽप्रकाश्यत्वनिर्धारणे च संपादक एव प्रभवेत्। प्रकाशनायाननुमता लेखाः प्रापणव्यये लब्धे परावर्तयितुं शक्येरन्।

४—अस्य मूल्यं भारते ब्रह्मदेशे च वार्षिकं मुद्राद्वयम्, द्वीपान्तरीयेभ्यस्तु प्रापणव्ययः पृथग् गृह्येत।

५—संस्कृतसाहित्यसम्मेलनस्य संरक्षकेभ्यः सहायकेभ्यो विशिष्टसदस्येभ्यश्च पत्रमिदं विना मूल्यं वितीर्येत।

६—ये प्रत्यब्दं पञ्चरूप्यकेभ्योऽनल्पं साहाय्यं विदधीरन्, तेऽस्य पत्रस्य सहायका मन्येरन्, नामानि च तेषां सहायकरूपेण पत्रे प्रकाश्येरन्।

७—ग्राहकैः पत्रव्यवहारे स्वीया ग्राहकश्रेणिगता संख्याऽवश्यं लेख्या। सर्वविधः पत्रव्यवहारश्च "म० म० गिरिधरशर्मा चतुर्वेदः, संस्कृतरत्नाकरकार्यालयः, जयपुरम्" इति संकेतेन विधेयः।

---

